मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥ ६६ ॥

किमिदमुचितं शुद्धेः श्लिष्टं[1] स्वपक्षसमुन्नतेः
फलपरिणतेर्युक्तं प्राप्तं[2] गुणप्रणयस्य वा ।
क्षणमुपगतः कर्णोपान्तं परस्य पुरःस्थिता-
न्विशिख निपतन्क्रूरं दूरान्नृशंस भिनत्सि[3] यत् ॥ ६७ ॥

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम् ।
निरालोके लोके कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः ॥ ६८ ॥

आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ६९ ॥

हेमकार सुधिये नमोऽस्तु ते दुस्तरेषु बहुशः परीक्षितुम् ।
काञ्चनाभरणमश्मना समं यत्त्वयैवै[4]मधिरोप्यते तुलाम् ॥ ७० ॥

वृत्त एव स घटोऽन्धकूपक[5] त्वां प्रसादमपि नेतुमक्षमः ।
मुद्रितं त्वधमचेष्टितं त्वया तन्मुखाम्बुकणिकाः परीप्सता[6] ॥ ७१ ॥

शतपदी सति पादशये क्षमा भुवि न गोष्पदमप्यतिवर्तितुम् ।
किमियता द्विपदस्य हनूमतो जलनिधिक्रमणे[7] विवदामहे ॥ ७२ ॥

न गुरुवंशपरिग्रहशौण्डता न च महागुणसंग्रहणादरः ।
फलविधानकथापि न मार्गणे किमपि[8] लुब्धकबालगृहेऽधुना ॥ ७३ ॥

तृणमणेर्मनुजस्य च तद्वतः किमुभयोर्विपुलाशयतोच्यते ।
तनुतृणाग्रलवावयवैर्ययोरवसिते ग्रहणप्रतिपादने ॥ ७४ ॥

---

१. 'स्पष्टं सपक्ष-' इति सुभा०. २. 'प्राप्तुं गुणप्रणयस्य ते' इति सुभा०. ३. 'निहंसि' इति सुभा०. ४. 'एतत्' इति सुभा०. ५. 'अन्धकूप यस्त्वत्प्रसादमपनेतुं' इति सुभा०. ६. 'प्रतीच्छता' इति सुभा०. ७. 'जलधिविक्रमणे' इति सुभा०. ८. 'किमिह' इति सुभा०.

तनुतृणाग्रधृतेन हृतश्चिरं क इव[1] तेन न मौक्तिकशङ्कया ।
स जलबिन्दुरहो विपरीतदृग्जगदिदं वयमत्र सचेतनाः ॥ ७५ ॥

बुध्यामहे न बहुधापि विकल्पयन्तः[2]
कैर्नामभिर्व्यपदिशेम[3] महामतींस्तान् ।
येषामशेषभुवनाभरणस्य हेम्न-
स्तत्त्वं विवेक्तुमुपलाः परमं प्रमाणम् ॥ ७६ ॥

संरक्षितुं कृषिमकारि कृषीवलेन
पश्यात्मनः प्रतिकृतिस्तृणपूरुषोऽयम् ।
स्तब्धस्य निष्क्रियतयास्तभियोऽस्य नून-
मैश्नन्ति[4] गोमृगगणाः पुनरेव सस्यम् ॥ ७७ ॥

कस्यानिमेषवितते नयने दिवौको-
लोकादृते जगति ते अपि वै गृहीत्वा ।
पिण्ड[5]प्रसारितमुखेन तिमे किमेत-
दृष्टं न बालिश विशद्बडिशं त्वयान्तः ॥ ७८ ॥

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयनेन महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥ ७९ ॥

स्वल्पाशयः स्वकुलशिल्पविकल्पमेव
यः कल्पयन्स्खलति काचवणिक्पिशाचः ।
ग्रस्तः स कौस्तुभमणीन्द्रसपत्नरत्न-
निर्यत्नगुम्फन[6]कवैकटिकेर्ष्ययान्तः ॥ ८० ॥

तत्प्रत्यर्थितया[7] वृतोऽनु कृतकः सम्यक्स्वतन्त्रो भया-
त्स्वस्थस्तान्न निपातयेदिति यथाकामं न संतोषितः[8] ।

---

१. 'इह येन' इति सुभा०. २. 'विकल्पमानाः' इति सुभा०. ३. 'व्यपदिशाम' इति सुभा०. ४. 'अत्स्यन्ति' इति सुभा०. ५. पिण्डे' इति सुभा०. ६. 'गुम्फपट्ट' इति सुभा०. ७. 'तत्प्रत्यन्नतया धृतो न तु कृतः' इति सुभा०. ८. 'संपोषितः' इति सुभा०.

संशुष्यन्वृषदंश एष कुरुतां मूकः स्थितोऽप्यत्र किं
गेहे किं बहुनाधुना गृहपतेश्चौराश्चरन्त्याखवः ॥ ८१ ॥
एवं चेत्सरसि[1] स्वभावमहिमा जाड्यं किमेतादृशं
यस्मादेव[2] निसर्गतः सरलता किं ग्रन्थिमत्तेदृशी ।
मूलं चेच्छुचि पङ्कजश्रुतिरियं कस्माद्गुणा यद्यमी
किं छिद्राणि सखे मृणाल भवतस्तत्त्वं न मन्यामहे ॥ ८२ ॥
ये[3] दिग्ध्वैव कृता विषेण कुसृतिर्येषां कियद्गण्यते
लोकं हन्तुमनागसं द्विरसना रन्ध्रेषु ये जाग्रति ।
व्यालास्ते विदधत्यमी सदसतोश्चूडामणिं[4] मूर्धभि-
र्नौचित्याद्गुणशालिनां क्वचिदपि भ्रंशोऽस्त्यलं चिन्तया ॥ ८३ ॥
अहो क्रौर्यं स्त्रीणां हतरजनि धिक्त्वामतिशठे
मृषा प्रक्रान्तेयं तिमिरकबरीविश्लथधृतिः ।
अवक्तव्ये पाते जननयननाथस्य शशिनः
कृतं स्नेहस्यान्तोचितमुदधिमुख्यैर्न तु जडैः ॥ ८४ ॥
अहो गेहेनर्दी दिवसविजिगीषाज्वररुजा
प्रदीपोऽयं स्थाने ग्लपयति मृषामूनवयवान् ।
उदात्तस्वच्छन्दाक्रमणहृतविश्वस्य तमसः
परिस्पन्दं द्रष्टुं मुखमपि च किं सोढममुना ॥ ८५ ॥
नामाप्यन्यतरोर्निमीलितमभूत्तत्तावदुन्मीलितं
प्रस्थाने स्खलित[5]स्ववर्त्मनि विधेरन्यैर्गृहीतः करः ।
लोकश्चायमदृष्टदर्शनवशाद्दृग्वैशसान्मोचितो[6]
युक्तं काष्ठिक लूनवान्यदसि तामाम्रालिमाकालिकीम् ॥ ८६ ॥
वाताहारतया जगद्विषधरैराश्वस्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।

---

१. 'सरसस्वभावपरता' इति सुभा०. २. 'यद्यस्त्येव' इति सुभा०. ३. 'यान्' इति सुभा०. ४. 'मूढा मणीन्' इति सुभा०. ५. 'स्खलतः' इति सुभा०. ६. 'दशादृग्वैशसादुद्धृतः' इति सुभा०.

तेऽ[1]प्यक्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ ८७ ॥

ऊढा येन महाधुराः सुविषमे मार्गे सदैकाकिना
सोढो येन कदाचिदेव न निजे गोष्ठेऽन्यशौण्डध्वनिः ।
आसीद्यस्तु गवां गणस्य तिलकं तस्यैव संप्रत्यहो
धिक्कष्टं धवलस्य जातजरसो गोः पण्यमुद्घोष्यते ॥ ८८ ॥

अस्थानोद्योगदुःखं जहिहि नहि नभः पङ्गुसंचारयोग्यं
स्वायासायैव साधो तव शलभ जवाभ्यासदुर्वासनेयम् ।
ते देवस्याप्यचिन्त्याः प्रचलितभुवनाभोगहेलावहेला-
मूलोत्खातानुमार्गा गतगिरिगुरवस्तार्क्ष्यपक्षाग्रवाताः ॥ ८९ ॥

चन्द्रेणैव तरङ्गभङ्गिबहुलं संवर्ध्यमानाम्भसो
दद्युर्जीवनमेव किं गिरिसरित्स्रोतांसि यद्यम्बुधेः ।
तेष्वेव प्रतिसंविधानविकलं पश्यत्सु साक्षिष्विव
द्राग्दर्पोद्धुरमागतेष्वपि न स क्षीयेत यद्यन्यथा ॥ ९० ॥

किलैकचुलकेन यो मुनिरपारमब्धिं पपौ
सहस्रमपि घस्मरो विकृत एव तेषां पिबेत् ।
स संभवति किंचिदम्बरविकासिधाम्ना विना
सदप्यसदिव स्थितं स्फुरितमन्तरोजस्विनाम् ॥ ९१ ॥

ग्रावाणोऽत्र विभूषणं त्रिजगतो मर्यादया स्थीयते
नन्वत्रैव विधुः स्थितो हि विबुधाः संभूय पूर्णाशिषः ।
शेते चोद्गतनाभिपद्मविलसद्ब्रह्मेह देवः स्वयं
दैवादेव गतः स्वकुक्षिभृतये सोऽप्यम्बुधिर्निम्नगाः ॥ ९२ ॥

अनीर्ष्याः श्रोतारो मम वचसि चेद्वच्मि तदहं
स्वपक्षाद्भेतव्यं न[2] तु बहु विपक्षात्प्रभवतः ।

---

१. 'तेऽपि क्रूर–' इति सुभा०. २. 'बहु न तु' इति सुभा०.

तमस्याक्रान्ताशे कियदिव[1] हि तेजोवयविनः
स्वशक्त्या भासन्ते दिवसकृति सत्येव न पुनः ॥ ९३ ॥
एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसो
यो मुक्तामणिरित्यमंस्त स जडः शृण्वन्नेकस्मादपि[2] ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने तत[3]-
स्तत्रोड्डीय गतो[4] ममेत्यनुनिशं निद्राति नान्तः शुचा ॥ ९४ ॥
आस्तेऽत्रैव सरस्यहो बत कियान्संतोषपक्षग्रहो
हंसस्यास्य मनाङ् न धावति मनः[5] श्रीधाम्नि पद्मे क्वचित् ।
सुप्तोऽद्यापि न[6] बुध्यते तदितरस्तावत्प्रतीक्षामहे
वेलामित्युदरप्रिया[7] मधुलिहः सोढुं क्षणं न क्षमाः[8] ॥ ९५ ॥
भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने
दातुं गण्डचपेटमु[9]ज्झितभिया हस्तः समुल्लासितः ।
यच्चाधोमुखमक्षिणी विदधता[10] नागेन तत्र स्थितं
तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥ ९६ ॥
मृत्योरास्यमिवाततं धनुरिदं[11] चाशीविषाभाः शराः
शिक्षा सापि जितार्जुनप्रभृतिका[12] सर्वत्र निम्नाकृतिः ।
अन्तः क्रौर्यमहो शठस्य मधुरं ह्रा हारि गेयं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम् ॥ ९७ ॥
ग्रावग्रस्तसमस्तचेतनमनोवैदग्ध्यमुग्धो जनः
कः स्पर्धामधिरोहति त्रिभुवने चित्रं त्वया तन्वता ।
भावानां सदसद्विवेककलनाभ्यासेन जीर्णान्तरं
दूरादेव न नाम येन हृदयं वोढुं कृतो दुर्ग्रहः ॥ ९८ ॥

---

१. 'कियदपि' इति सुभा०. २. 'यदस्मादपि' इति सुभा०. ३. 'शनैः' इति सुभा०. ४. 'गते हहेत्यनुदिनम्' इति सुभा०. ५. 'मतिः' इति सुभा०. ६. 'विबुध्यते न तदितः' इति सुभा०. ७. 'उषसि प्रिया' इति सुभा०. ८. 'त एव क्षमाः' इति सुभा०. ९. 'कर्णचपेटम्' इति सुभा०. १०. 'पिदधता' इति सुभा०. ११. 'अमी' इति सुभा०. १२. 'जितार्जुना प्रतिभयं सर्वाङ्गनिम्ना गतिः' इति सुभा०.

कोऽयं भ्रान्तिप्रकारस्तव पवन[1] पदं लोकपादाहतानां
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम् ।
[2]अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां
केनोपायेन साध्यो[3] वपुषि कलुषतादोष एष त्वयैव ॥ ९९ ॥

एते ते विजिगीषवो नृपगृहद्वारार्पणावेक्षणाः
क्षिप्यन्ते वरयाचनाहितधियः कोपोद्धतैर्वेत्रिभिः ।
अर्थेभ्यो विषयोपभोगविरसैर्नाकारि यैरादर-
स्ते तिष्ठन्ति मनस्विनः सुरसरित्तीरे मनोहारिणि ॥ १०० ॥

वाता वान्तु कदम्बरेणु[4]र्बहला नृत्यन्तु सर्पद्विषः
सोत्साहा [5]नवतोयपानगुरवो मुञ्चन्तु नादं घनाः ।
मग्नां कान्तवियोग[6]दुःखदहने मां वीक्ष्य दीनाननां
[7]विद्युत्प्रस्फुरसि त्वमप्यकरुणे स्त्रीऽत्वेऽपि तुल्ये सति ॥ १०१ ॥

प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे येन चिरं धृतोऽसि विदधे यस्ते सपर्यामपि ।
तस्यान्तः स्मितमात्रकेण जनयञ्जीवापहारं क्षणा-
द्भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥ १०२ ॥

रज्ज्वा दिशः प्रवितताः सलिलं विषेण
पाशैर्मही हुतभुजा ज्वलिता वनान्ताः ।
व्याधा पदान्यनुसरन्ति [8]गृहीतचापाः
कं देश[9]माश्रयतु यूथपतिर्मृगाणाम् ॥ १०३ ॥

प्रेङ्खन्मयूखनख[10]शातशिखानिखात-
विख्यातवारणगणस्य हरेर्गुहायाम् ।

---

१. 'पवन घनावस्करस्थानजातम्' इति सुभा०. २. 'यस्मिन्' इति सुभा०. ३. 'सह्यः' इति सुभा०. अयं 'कोऽयं' इत्यादिश्लोकः सुभाषितावलौ भागवतामृतदत्तनाम्ना समुद्धृतः. ४. 'शबला' इति सुभा०. ५. 'नववारिभारगुरवो' इति सुभा०. ६. 'दुःखजलधौ' इति सुभा० ७. 'विद्युत्किं स्फुरसि' इति सुभा०. ८. 'गृहीतबाणाः' इति सुभा०. ९. 'आश्रयति' इति सुभा०. 'अयं रज्ज्वा' इत्यादि श्लोकः सुभाषितावलौ मुक्तापीडनाम्ना समुद्धृतः. १० 'नखपात—' इति सुभा०.

क्रोष्टा निकृष्टसरमासुतदृष्टिनष्ट-
धाष्टर्यः प्रविष्ट[1] इति कष्टमिहाद्य दृष्टम् ॥ १०४ ॥

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ १०५ ॥

विख्यातं विजयावहं रणभुवि व्याप्तं शुभैर्लक्षणै-
स्तं चेन्मुञ्चति कानने नरपतिस्तुङ्गं महान्तं गजम् ।
अश्वत्थाम्रकपुण्ड्रकेक्षुकदलीरास्वाद्य वंशाङ्कुरा-
न्स्वैरं तस्य मनोरमे विचरतः का नाम हानिर्वने ॥ १०६ ॥

विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं
शुकस्यासीद्बुद्धिः फलमपि भवेदस्य सदृशम् ।
इति ध्यात्वोपास्तं फलमपि च दैवात्परिणतं
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १०७ ॥

अयं[2] वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ १०८ ॥

इति रत्नत्रये भल्लटशतकं समाप्तम् ।

---

श्रीनीलकण्ठदीक्षितप्रणीतं[3]

## सभारञ्जनशतकम् ।

षड्दर्शनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥ १ ॥

---

१. 'निविष्टः' इति सुभा०. 'अयं प्रेङ्खन्मयूख' इत्यादिश्लोकः सुभाषितावलौ उपाध्याय-धनवर्मनाम्ना समुद्धृतः. २. 'अयं वारामेको' इत्यादिश्लोकः शार्ङ्गधरपद्धतौ मालवरुद्रनाम्ना समुद्धृतः. ३. श्रीमदप्पदीक्षितसोदर्यस्याच्चा(प्पा)दीक्षितस्य पौत्रो नारायणदीक्षितपुत्रः श्रीनीलकण्ठदीक्षितोऽयं ख्रिस्ताब्दीयसप्तदशशतकपूर्वार्धे द्रविडदेशमलंचकार जन्मना,

सन्ति सर्वविधा मर्त्या न सन्त्येके विपश्चितः ।
असूर्येणेव लोकेन किं तेन विषयेण नः ॥ २ ॥
उद्यन्तु शतमादित्या उद्यन्तु शतमिन्दवः ।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः ॥ ३ ॥
बहुभ्यो बहु बोद्धव्यं बहुधा बहुवासरान् ।
बहुकल्पशतस्थायि लब्धुं बहुविधं यशः ॥ ४ ॥
पाषाणाः सर्व एवैते पद्मरागेषु को गुणः ।
प्रकाशः कश्चिदत्रास्तेऽपरत्र स न विद्यते ॥ ५ ॥

---

यतोऽनेन नीलकण्ठविजयप्रारम्भे 'अष्टात्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु (४७३८)। कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥' इति स्वग्रन्थनिर्माणसमयो लिखितः. अस्मज्ज्ञाता नीलकण्ठदीक्षितकृता ग्रन्थास्त्वेते—(१) अन्यापदेशशतकम्, (२) कलिविडम्बनशतकम्, (३) गङ्गावतरणम्, (४) नीलकण्ठविजयः (नीलकण्ठ-चम्पूः), (५) शान्तिविलासः, (६) शिवलीलार्णवः, (७) सभारञ्जनम्. वर्तमानशतक एव काश्यां समुत्पन्नेन शंकरदीक्षितेन प्रणीता गङ्गावतरणचम्पूः पूर्वोक्तगङ्गावतरणा-द्भिन्ना. काव्यमालाद्वितीयाङ्के श्रीमदप्पदीक्षितनाम्ना मुद्रितमुपदेशशतकं नीलकण्ठदी-क्षितेन कृतं न त्वप्पदीक्षितेनेत्यपि केचिद्वदन्ति. अस्मद्दृष्टपुस्तकद्वये तु 'अप्पदीक्षित-कृतमुपदेशशतकम्' इत्येवास्ति. (१) ओष्ठशतककर्ता शुक्लजनार्दनसूनुः कविनील-कण्ठः, (२) काशिकातिलककर्ता रामभट्टसूनुर्नीलकण्ठभट्टः, (३) कुण्डमण्डपविधान-कर्ता नीलकण्ठः, (४) जारजातशतककर्ता कविनीलकण्ठशर्मा, (५) नारायणगीता-कर्ता नीलकण्ठब्रह्मचारी, (६) ब्रह्ममीमांसाभाष्यकर्ता नीलकण्ठशैवाचार्यः, (७) भग-वन्तभास्करकर्ता शंकरभट्टसूनुर्नीलकण्ठभट्टः, (८) भारतभावदीपस्य मन्त्ररहस्यप्रका-शिकायाश्च कर्ता गोविन्दसूनुर्नीलकण्ठचतुर्धरः, (९) वर्षतन्त्रकर्ता अनन्तदैवज्ञसूनुर्नील-कण्ठदैवज्ञः, इत्याद्या अन्येऽपि बहवो नीलकण्ठास्तत्तद्देशे काले च समभूवन्. श्रीमा-धवकविना शंकरविजयस्य पञ्चदशे सर्गे 'तदनन्तरमागमान्तविद्यां प्रणतेभ्यः प्रतिपादय-न्तमेनम् । हरदत्तसमाह्वयोऽधिगम्य स्वगुरुं संगिरते स्म नीलकण्ठम् ॥', 'सितभूतित-रङ्गिताखिलाङ्गैः स्फुटरुद्राक्षकलापकम्रकण्ठैः । परिवीतमधीतशैवशास्त्रैर्मुनिरायान्तममुं ददर्श. शिष्यैः ॥', 'विजितो यतिभूभृता स शैवः सह गर्वेण विसृज्य च स्वभाष्यम् । शरणं प्रतिपेदिवान्महर्षिं हरदत्तप्रमुखैः सहात्मशिष्यैः ॥' इत्यादिना वर्णितः कश्चन नीलकण्ठाभिधो महाशैवः श्रीशंकराचार्यसमयेऽप्यासीत्. पूर्वोक्तो ब्रह्ममीमांसाभाष्य-कर्ता नीलकण्ठशैवाचार्यः कदाचिदयमेव स्यात्.

जात्यन्धा जातिबधिरा जातिमूकाश्च ते जनाः ।
सम्यगाराधिता यैर्न सन्तो विज्ञानसिन्धवः ॥ ६ ॥
अपि मानुष्यकं लब्ध्वा भवन्ति ज्ञानिनो न ये ।
पशुतैव वरा तेषां प्रत्यवायाप्रवर्तनात् ॥ ७ ॥
किं परोक्षं किमध्यक्षं किं लभ्यं किं नु दुर्लभम् ।
सर्वमैन्द्रियकं वस्तु सर्वं करगतं सताम् ॥ ८ ॥
स्थावरा जङ्गमा मर्त्या ब्राह्मणा मुनयः सुराः ।
शिव इत्यप्यमी भेदाश्चिदुत्कर्षनिबन्धनाः ॥ ९ ॥
विद्युज्जलधरो वृष्टिश्चन्द्रार्कौ सागरा इति ।
सर्वमद्भुतमज्ञानाज्ज्ञानतां तु न किंचन ॥ १० ॥
तत्र तत्र स्थितैर्ज्ञानकरणैरिव विग्रहः ।
विद्वद्भिः शोभते देशस्तैर्विहीनस्त्वमङ्गलः ॥ ११ ॥
अमलीमसमच्छिद्रमक्रौर्यमतिसुन्दरम् ।
अदेयमप्रतिग्राह्यमहो ज्ञानं महाधनम् ॥ १२ ॥
संदर्भशक्तिहीनानां शब्दाभ्यासो वृथा श्रमः ।
मुग्धानि लब्ध्वा पुष्पाणि मुण्डितः किं करिष्यति ॥ १३ ॥
शास्त्रेषु दुर्ग्रहोऽप्यर्थः स्वदते कविसूक्तिषु ।
दृश्यं करगतं रत्नं दारुणं फणिमूर्धनि ॥ १४ ॥
आञ्जस्यं व्यवहाराणामार्जवं परमं धियाम् ।
स्वातन्त्र्यमपि तन्त्रेषु सूते काव्यपरिश्रमः ॥ १५ ॥
साहित्यविद्याहीनानां सर्वशास्त्रविदामपि ।
समाजं परिपश्यन्ति समजं[1] बुद्धिशालिनः ॥ १६ ॥
अशिक्षितानां काव्येषु शास्त्राभ्यासो निरर्थकः ।
किमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः ॥ १७ ॥
अन्धा विद्वज्जनैर्हीना मूका कविभिरुज्झिता ।
बधिरा गायनैर्हीना सभा भवति भूभृताम् ॥ १८ ॥

१. समजः पशुसमूहः.

साहित्यादपि शास्त्राणि विशिष्टानीति चेन्मतिः ।
ततोऽपि वेदाध्ययनं ततोऽपि शिवकीर्तनम् ॥ १९ ॥

सन्त्वश्वाः सन्तु मातङ्गाः सन्तु योधाः सहस्रशः ।
नरेन्द्राणां विशेषेण न विना कविना यशः ॥ २० ॥

काणाः कमलपत्राक्षाः कदर्याः कल्पशाखिनः ।
कातरा विक्रमादित्याः कविदृग्गोचरं गताः ॥ २१ ॥

पारवश्यं वृथा दास्यं पञ्चानामेकदारता ।
पाण्डवानामभूत्कीर्त्यै पाराशर्यकवेर्गिरा ॥ २२ ॥

जानाते यन्न चन्द्रार्कौ जानते यन्न योगिनः ।
जानीते यन्न भर्गोऽपि तज्जानाति कविः स्वयम् ॥ २३ ॥

सर्वासामपि विद्यानां साहित्यं हि कवेः पदम् ।
साधारण्येऽपि यत्रैव सारस्वतपदं ध्रुवम् ॥ २४ ॥

नादातव्यं न दातव्यं न कर्तव्यं च किंचन ।
सान्त्वमेकं प्रयोक्तव्यं सर्वं तस्य वशे जगत् ॥ २५ ॥

नामरूपात्मकं विश्वं दृश्यते यदिदं द्विधा ।
तत्राद्यस्य कविर्वेधा द्वितीयस्य चतुर्मुखः ॥ २६ ॥

ज्योतिष्टोमे किमुक्थे किं किमाज्ये किं रथन्तरे ।
स्तुतिरित्येव हृष्यन्ति सर्वज्ञा अपि देवताः ॥ २७ ॥

न जातिरूपकर्माणि दृश्यन्ते मृदुभाषिणि ।
पक्षिणो मलिनास्तत्र परपुष्टा निदर्शनम् ॥ २८ ॥

अर्थहीनोऽपि मधुरः शब्दो लोकप्रियंकरः ।
वीणावेणुमृदङ्गादीन्यत्रोदाहरणानि नः ॥ २९ ॥

जिघांसन्तोऽपि पशवो रुदन्तोऽपि स्तनंधयाः ।
घ्नन्तोऽपि रिपवो युद्धे वशमायान्ति सान्त्वतः ॥ ३० ॥

दातुः प्रतिग्रहीतुश्च यौ हस्तावुत्तराधरौ ।
तयोरप्यौत्तराधर्यं ताभ्यामेवोपपाद्यते ॥ ३१ ॥

अमर्त्याः सन्तु मर्त्या वा चेतनाः सन्त्वचेतनाः ।
दानमेव पुरस्कृत्य स्तूयते भुवनैस्त्रिभिः ॥ ३२ ॥
देयं द्रव्यमियत्तावद्दानोत्कर्षे न कारणम् ।
किं त्ववच्छेदराहित्यं धनदाम्बुदयोरिव ॥ ३३ ॥
ददातिराददातिश्च द्वावेतौ परमाद्भुतौ ।
ययोः स्वाम्यं च दास्यं च लीलामात्रविजृम्भितम् ॥ ३४ ॥
दोषा अपि गुणायन्ते दातारं समुपाश्रिताः ।
कालिमानं किलालम्ब्य कालमेघ इति स्तुतिः ॥ ३५ ॥
किं दातुरखिलैर्दोषैः किं लुब्धस्याखिलैर्गुणैः ।
न लोभादधिको दोषो न दानादधिको गुणः ॥ ३६ ॥
अर्थाः साधारणा एव वियुज्यन्ते स्वभावतः ।
ममतां त्यजतां तेषु महदुत्पद्यते यशः ॥ ३७ ॥
मृतोऽप्यर्थं न मोक्ष्यामि बद्ध्वा नेष्यामि मूर्धनि ।
इति चेत्सुदृढो लोभः पात्रे देयमशङ्कितम् ॥ ३८ ॥
षष्टिर्देशान्तरे लभ्या शतं दत्त्वात्र नैगमे[1] ।
पात्रे त्वेकमिहोत्सृज्य परत्रानन्तमाप्यते ॥ ३९ ॥
को दत्ते क इवादत्ते स्वादृष्टं स्वेन भुज्यते ।
धीभेदमात्रे दातृत्वे क्लिश्यन्ते कृपणाः कियत् ॥ ४० ॥
स्वातन्त्र्यं यदि चोरेऽपि भोक्तृत्वं यदि बन्धुषु ।
निष्कर्षे तु भ्रमः स्वाम्यं तत्त्यक्त्वा लभ्यतां यशः ॥ ४१ ॥
न धैर्येण विना लक्ष्मीर्न शौर्येण विना जयः ।
न ज्ञानेन विना मोक्षो न दानेन विना यशः ॥ ४२ ॥
स्वकीयान्भुञ्जते मत्स्याः स्वापत्यानि फणाधराः ।
बलाबलव्यवस्थेयं बलिनस्त्वकुतोभयाः ॥ ४३ ॥
गुरुं हत्वा दिवं यान्ति तृणं छित्त्वा पतन्त्यधः ।
बलिनां दुर्बलानां च श्रुतयोऽपि द्विधा स्थिताः ॥ ४४ ॥

---

१. वणिजि.

बलिनो बलिनः स्निह्यन्त्यबलं तु न गृह्णते ।
दावं दीपयते चण्डो दीपं व्याहन्ति मारुतः ॥ ४५ ॥

बाधका अपि लोकानां बलिनो बिभ्यति स्वयम् ।
सर्वं बलवतः पथ्यं भिषग्भिरपि गीयते ॥ ४६ ॥

शुभप्रारब्धलब्धापि लक्ष्मीः शौर्यविवर्जिते ।
शोकेन दुःखमाप्नोति षण्ढे कुलवधूरिव ॥ ४७ ॥

सर्वत्र लाल्यते शूरो भीरुः सर्वत्र हन्यते ।
पच्यन्ते केवला मेषाः पूज्यन्ते युद्धदुर्मदाः ॥ ४८ ॥

भार्यायाः सुन्दरः स्निग्धो वेश्यायाः सुन्दरो धनी ।
श्रीदेव्याः सुन्दरः शूरो भारत्याः सुन्दरः सुधीः ॥ ४९ ॥

न शौर्यं शौर्यमित्येव स्तूयते बुद्धिशालिभिः ।
किं तु नीत्या समाश्लिष्टं वाग्मित्वमिव मेधया ॥ ५० ॥

शौर्येण लोकसेव्यत्वं शौर्येण क्षितिपालता ।
शौर्येण लभ्यः स्वर्गोऽपि शौर्यं कस्य न साधनम् ॥ ५१ ॥

समरेषु नरेन्द्राणां सवनेषु द्विजन्मनाम् ।
पतिकर्मसु नारीणां शौर्यं भवति भूषणम् ॥ ५२ ॥

शौर्ये तुल्ये कथं वृत्तं स्वामी दास इति द्विधा ।
अन्वयव्यतिरेकाभ्यां नीरेरित्यवधार्यताम् ॥ ५३ ॥

न जयाय स्वतः शौर्यं किं तु नीत्योपबृंहितम् ।
प्रयुक्तं हि जयत्यस्त्रं प्रयोक्ता न स्वतः क्वचित् ॥ ५४ ॥

इदमेव परं शौर्यमुपायैस्त्रिभिरन्वितम् ।
इदमेव परं मौर्ख्यमुपायैस्त्रिभिरुज्झितम् ॥ ५५ ॥

पराक्रमन्ते युद्धेषु सममेवोभये भटाः ।
विजयन्तेऽभ्युपायज्ञा विजीयन्ते तदुज्झिताः ॥ ५६ ॥

किं शास्त्रैर्बहुधाभ्यस्तैः किं चातुर्येण किं धिया ।
किं शौर्येणानिवार्येण ललाटे चेन्न लिख्यते ॥ ५७ ॥

घटमानाः कुटुम्बेषु दरिद्रति विपश्चितः ।
मूढेषु रमते लक्ष्मीरहो दिष्टस्य चेष्टितम् ॥ ५८ ॥

तुल्यं कर्षन्ति पृथिवीं तुल्यं शास्त्राण्यधीयते ।
उन्मज्जन्ति निमज्जन्ति दिष्टस्यैकस्य चेष्टया ॥ ५९ ॥

लुभ्यन्ति वितरन्तोऽपि कुप्यन्ति सरला अपि ।
मुह्यन्ति मतिमन्तोऽपि भोक्तुर्भाग्यविपर्ययात् ॥ ६० ॥

अधीयते विजानन्ति विरज्यन्ति मुहुर्मुहुः ।
नात्यन्ताय निवर्तन्ते नरा वैषम्यतो विधेः ॥ ६१ ॥

दोहदैरालवालैश्च कियद्वृक्षानुपास्महे ।
ते तु कालं प्रतीक्षन्ते फलपुष्पसमुद्गमे ॥ ६२ ॥

कः प्रसूते पुरोवातं कः प्रेरयति वारिदम् ।
प्राप्ते तु श्रावणे मासि भवत्येकार्णवं जगत् ॥ ६३ ॥

कालः करोति कार्याणि काल एव निहन्ति च ।
करोमीति विहन्मीति मूर्खो मुह्यति केवलम् ॥ ६४ ॥

अपि कालस्य यः कालः सोऽपि कालमपेक्षते ।
कर्तुं जगन्ति हन्तुं वा कालस्तेन जगत्प्रभुः ॥ ६५ ॥

कालः सदागतिरपि स्थायीव परिचेष्टते ।
चण्डमारुतवद्विश्वमधरोत्तरयन्क्षणात् ॥ ६६ ॥

कालश्चालयति प्रायः पण्डितान्पामरानपि ।
तं चेच्चिकीर्षसि वशे तितिक्षैव महौषधम् ॥ ६७ ॥

रन्ध्रेषु प्रहरिष्यन्तः कति कामादयोऽरयः ।
क्षणान्नश्यति लोकोऽयं क्षमा चेन्न नियच्छति ॥ ६८ ॥

अपकारदशायामप्युपकुर्वन्ति साधवः ।
छिन्दन्तमपि वृक्षः स्वच्छायया किं न रक्षति ॥ ६९ ॥

स्रवत्येव तदा ज्ञानं स्रवत्येव तदा तपः ।
छिद्रं छिद्रमनुप्राप्य न चेच्छादयति क्षमा ॥ ७० ॥

क्षमां रक्षन्ति ये यत्नात्क्षमां रक्षन्ति ते चिरम् ।
क्षमास्ते निभृता येषु क्षमास्ते सर्वकर्मसु ॥ ७१ ॥

मूर्खाः शमयितुं दुःखं संरभन्ते ततस्ततः ।
क्षमयैव निगृह्णन्ति धीराः संरम्भवर्जिताः ॥ ७२ ॥

आ कल्यादा निशीथाच्च कुक्ष्यर्थं व्याप्रियामहे ।
न च निर्वृणुमो जातु शान्तास्तु सुखमासते ॥ ७३ ॥

नायास्यन्ते शरीराणि न दैन्यमवबुध्यते ।
संभवत्यपि चानन्दः शान्तिमभ्यस्यतां सताम् ॥ ७४ ॥

प्रसीदत्यपरिस्पन्दि पयः कलुषितं यथा ।
तथाशान्तमपि स्वान्तं प्रसीदति शनैः शनैः ॥ ७५ ॥

यत्नेन महता लभ्या दासा द्वित्राः सुखाय नः ।
शान्तस्य कालादृष्टाद्याः शतं भृत्या अचेतनाः ॥ ७६ ॥

अपि मृद्व्या गिरा लभ्यः सदा जागर्त्यतन्द्रितः ।
नास्ति धर्मसमो भृत्यः किंचिदुक्तस्तु धावति ॥ ७७ ॥

अर्थेनोपार्ज्यते धर्मो धर्मेणार्थ उपार्ज्यते ।
अन्योन्याश्रयणं ह्येतदुभयोत्पत्तिसाधनम् ॥ ७८ ॥

विपणिः पुण्यतीर्थानि विक्रेतारस्त्वकिंचनाः ।
तृणेनाप्यन्ततो धर्मः पर्वसु क्रीयते महान् ॥ ७९ ॥

चुलकोदकमात्रेण धान्यमुष्टिव्ययेन वा ।
मरुभूमिषु दुर्भिक्षे धर्मसस्यं महाफलम् ॥ ८० ॥

धर्मो नर्मसखः कामे गुरुस्तत्त्वोपदेशने ।
भटः संगररङ्गेषु सचिवोऽर्थसमर्जने ॥ ८१ ॥

भुवि वृक्षो दिवि च्छाया भुवि कूपो जलं दिवि ।
भुवि यद्गृह्यते विप्रैर्दिवि तद्दीयते सुरैः ॥ ८२ ॥

कदलीकन्दवद्धर्मो न रोहति बहिर्गतः ।
छादितस्तु फलं चारु सूते पनसमूलवत् ॥ ८३ ॥

दुःखेनोपार्ज्यते धर्मः सुखेन तु विनाश्यते ।
कृच्छ्रलब्धमिमं त्रातुं नेच्छन्ति मुनयः सुखम् ॥ ८४ ॥
संपाद्यतां वा यत्नेन यद्वा विक्रीयतामयम् ।
सर्वथा भजतावाप्यो धर्मो भवति नान्यथा ॥ ८५ ॥
अर्थवन्तः प्रशस्यन्ते निन्द्यन्ते तद्विनाकृताः ।
आगमेष्वपि चेदेवमद्भुतं किं शरीरिषु ॥ ८६ ॥
अर्थोऽप्यर्थेन चेत्साध्यः का वार्ता धर्मकामयोः ।
अर्थः सर्वजगन्मूलमनर्थोऽर्थविपर्ययः ॥ ८७ ॥
कर्मज्ञानं च मोक्षाय कर्मण्यर्थोऽधिकारिता ।
अतोऽर्थेनैव कैवल्यं न कैवल्येन लभ्यते ॥ ८८ ॥
कथमर्थं निषेधन्तु श्रुतयः स्मृतयोऽपि वा ।
यासामेकं पदमपि न चलत्यर्थतो विना ॥ ८९ ॥
लक्ष्मीश इति गोविन्दो मेरुधन्वेति शंकरः ।
हिरण्यगर्भ इत्येव ब्रह्मापि बहु मान्यते ॥ ९० ॥
ऊर्ध्वं गच्छन्ति यं त्यक्त्वा यं गृहीत्वा पतन्त्यधः ।
तस्य गौरवमर्थस्य तावतैवानुमीयताम् ॥ ९१ ॥
गृहिणा यदि लभ्येत गृहिणी हृदयंगमा ।
संसार इति को भारस्तं सारमनुपश्यतः ॥ ९२ ॥
आहृत्य चिनुमः स्वर्गमपवर्गमनुक्रमात् ।
अनुकूले हि दांपत्ये प्रतिकूलं न किंचन ॥ ९३ ॥
गृहिणीवृत्तिदोषेण गौतमोऽत्यन्ततापितः ।
आतस्थे दुःखविध्वंसं कैवल्यं परमं मुनिः ॥ ९४ ॥
अपि यत्परमं तत्त्वमर्धेन्दुकृतशेखरम् ।
तस्यापि तावानानन्दः किमसज्जननीं विना ॥ ९५ ॥
निन्दन्ति च प्रशंसन्ति निगमा यद्गृहाश्रमम् ।
दांपत्यसाम्यवैषम्यभेदादेतद्व्यवस्थितिः ॥ ९६ ॥

इन्द्रियाण्यनुपक्लेश्य लभ्यं श्रेयो गृहाश्रमे ।
अतस्तुर्याश्रमं प्राहुरबाधन्यायबाधितम् ॥ ९७ ॥

भुज्यते यत्सुखं धीरैरप्रमत्तैर्गृहाश्रमे ।
स्वर्गस्तस्यागसः पूर्तिरपवर्गोऽस्य नित्यता ॥ ९८ ॥

दृष्टदोषोऽपि गार्हस्थ्ये दीर्घदर्शितया स्वयम् ।
गार्हस्थ्यमेव परमं मेने नैयायिको मुनिः ॥ ९९ ॥

उच्चावचं जगद्दौःस्थ्यमेक एव निषेधति ।
प्रविष्टमात्रो नृपतिः प्रपञ्चमिव नः श्रुतिः ॥ १०० ॥

न राजानं विना राज्यं बलवत्स्वपि मन्त्रिषु ।
प्राणेष्वसत्सु किं देहश्चण्डवातेन धार्यते ॥ १०१ ॥

मातुः किंचित्पितुः किंचिदाचार्यात्किंचिदाप्यते ।
सम्यग्विनीतैः शास्त्रेषु सर्वं राज्ञस्तु लभ्यते ॥ १०२ ॥

चलन्ति सर्वमर्यादाश्चलिते सति पार्थिवे ।
पर्वता अपि कम्पन्ते प्रसक्ते कम्पने भुवः ॥ १०३ ॥

पत्न्या मङ्गल्ययोगेन पत्युरायुः प्रवर्धते ।
प्रकृतीनां तु भाग्येन पार्थिवः सुखमेधते ॥ १०४ ॥

निर्मितं शतकं साग्रं नीलकण्ठेन यज्वना ।
सभारञ्जनमेतेन साधयन्तु मनीषिणः ॥ १०५ ॥

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकः शतप्रबन्धनिर्वाहकमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाचादीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन विरचितं सभारञ्जनशतकम् ।

---

## महाकविश्रीकालिदासकृता

## नवरत्नमाला[1] ।

ॐकारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥ १ ॥

---

१. देवीस्तुतिरूपोऽयं ग्रन्थः.

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम्।
वामकुचनिहितवीणां वरदां संगीतमातृकां वन्दे ॥ २ ॥
श्यामलिमसौकुमार्यामानन्दामन्दसंपदुन्मेषाम्।
तरुणिमकरुणापूरां मदजलकल्लोललोचनां वन्दे ॥ ३ ॥
नखमुखमुखरितवीणानादरसास्वादनवनवोल्लासम्।
मुखमम्ब मोदयतु मां मुक्ताताटङ्कमुग्धहसितं ते ॥ ४ ॥
[१]सरिगमपधनिरतां तां वीणासंक्रान्तकान्तहस्तान्ताम्।
शान्तां मृदुलस्वान्तां कुचभर[२]तान्तां नमामि शिवकान्ताम् ॥ ५ ॥
अवटुतटघटितचूलीपालीं तालीपलाशताटङ्काम्।
वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ६ ॥
वीणारवानुषङ्गं विकचमदामोदमाधुरीभृङ्गम्।
करुणापूरतरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ७ ॥
मणिभङ्गमेचकाङ्गीं मातङ्गीं नौमि सिद्धमातङ्गीम्।
यौवनवनसारङ्गीं संगीताम्भोरुहानुभवभृङ्गीम् ॥ ८ ॥
मेचकमा[३]सेचनकं मिथ्यादृष्टान्तमध्यभागं तम्।
मातस्तव स्वरूपं मङ्गलसंगीतसौरभं मन्ये ॥ ९ ॥
नवरत्नमालिकाख्यां विरचितमातङ्गकन्यकाभूषाम्।
यः पठति लिखति वैतां स भवेद्वागीश्वरः साक्षात् ॥ १० ॥

इति महाकविश्रीकालिदासकृता नवरत्नमाला समाप्ता।

---

१. सरिगमेति सप्तस्वरसूचकान्यक्षराणि. २. खिन्नाम्. ३. 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्.'

# KÂVYAMÂLÂ.



A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chandas, Alankâras &c.

## PART VIII.

EDITED BY

PANḌIṬ DURGÂPRASÂD

AND

KÂS'INÂTH PÂṆDURANG PARAB.

Second Edition.

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

23, KOLBHAT LANE, KALBADEVI ROAD,

Bombay:

1911.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## अष्टमो गुच्छकः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परवोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

द्वितीयावृत्तिः

स च

मुम्बय्यां

निर्णयसागरमुद्रायन्त्राधिपतिभिः तुकाराम जावजी इत्येतैः
स्वीये मुद्रायन्त्रे बा. रा. घाणेकरद्वारा मुद्रयित्वा
प्राकाश्यं नीतः. कोलभाटवीथ्यां नं. २३

१९११



मूल्यमेको रूप्यकः ।

# अनुक्रमणिका ।

# काव्यमाला।

श्रीकूरनारायणकविप्रणीतं[1]

## सुदर्शनशतकम्।

सटीकम्।

रङ्गेशविज्ञप्तिकरामयस्य चकार चक्रेशनुतिं निवृत्तये।
समाश्रयेऽहं वरपूरणीं यस्तं कूरनारायणनामिनं मुनिम्॥

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चि-
र्बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना स्वधाम्ना।
दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्पा
ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि॥ १॥

बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना बाह्यश्चाबाह्यश्च बाह्याबाह्यौ। बाह्याबाह्यौ तावन्धकारौ च बाह्याबाह्यान्धकारौ। बाह्यान्धकारो बाह्येषु स्रक्चन्दनादिषु विषयेषु भोग्यताभ्रान्तिः। 'संसारसर्पदष्टानां भोग्याः स्रक्चन्दनादयः। मोहेन मधुरायन्ते निसर्गान्निम्बसंनिभाः॥' इत्युक्तत्वात्। ज्ञानशक्त्यादिकल्याणगुणविभूषिते सकलजगदन्तर्यामित्वेनाबाह्यविषये श्रीरङ्गनायके निर्गुणत्वादिभ्रान्तिरबाह्यान्धकारः। अथवा विश्रृङ्खलविजृम्भमाणतमःपटलो बाह्यान्धकारः। अज्ञानान्यथाज्ञानविपरीतज्ञानादिरबाह्यान्धकारः। द्वन्द्वान्ते श्रूयमाणोऽन्धकारशब्दः प्रत्येकमभिसंबध्यते। तेन तमसा क्षतं नष्टं यज्जगत्। नष्टप्रवृत्ति नष्टेष्टसाधनप्रवृत्ति वेत्यर्थः। तादृशस्य जगतो भुवनस्यागदंकारश्चिकित्सको भूमा बाहुल्यं यस्य तत्तेन। अथवा चिकित्सकस्य भूमा बाहुल्यमिव बाहुल्यं यस्य तत्तेन स्वधाम्ना निरर्गलविनिर्गलत्स्वतेजःपटलेन सावित्रं सवितृसंबन्धि अ-

---

[1] अस्य कवेर्देशकालौ न ज्ञायेते. भाति चायं कश्चन विशिष्टाद्वैतमतानुयायी द्रविडः. शतकस्यास्यैकं मूलपुस्तकं जयपुरमहाराजाश्रितैर्वैद्यवरश्रीकृष्णशर्मभिर्दत्तम्. अपरमेकं मूलपुस्तकं टीकापुस्तकं च जयपुरवर्तिबुद्धिविवर्धिनीसभायाः संपादकेन दीक्षागुरूपनामकलक्ष्मीनारायणस्वामिसूनुना श्यामसुन्दरपण्डितेन समर्पितम्. मूलमात्रमेतस्य शतकस्य स्तोत्ररत्नावल्यामनतिशुद्धं मुद्रितमिति सटीकस्यास्य मुद्रणे वयं पुनः प्रवृत्ताः स्मः. तत्र टीकापुस्तके तत्प्रणेतुर्नाम नास्ति.

र्चिस्तेजस्तिरस्कृत्य आच्छिद्य । महत्कृतेनेत्यर्थः (?) । दिशि विदिशि सर्वासु दिक्षु । चतुर्दशभुवनेष्वित्यर्थः । उज्जिहाना उदयमाना । दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्पा दोषां भुजानां खर्जूः कण्डूतिस्तया दूरमत्यर्थं गर्जन्तः सिंहनादं कुर्वन्तो विबुधरिपवस्त्रिदशकण्टकास्तेषां वध्वो महिष्यस्तासां कण्ठा ग्रीवास्तेषां वैकल्यं मङ्गलसूत्रादिराहित्यं तस्मिन्कल्पा सज्जा संनद्धा । प्रचण्डभुजदण्डकण्डूलतया प्रलयसमयजलधरघोरघोषाटोपलोपकृद्गर्जनतर्जनादिकरणचणनिर्जरद्विषद्वधूवैधव्यविधानसंनद्धेत्यर्थः । अत एव जाज्वल्यमाना अप्रतिहतवृत्त्या प्रकाशमाना । सौदर्शनी सुदर्शनसंबन्धिनी ज्वाला भवतामभीप्सितान्यभीष्टार्थान् वीप्सया पौनःपुन्येन वितरतु ददातु दद्यात् । एतेनाश्रितानामिष्टानिष्टप्राप्तिहरणनिपुणेत्युक्तम् ॥

प्रत्युद्यातं मयूखैर्नभसि दिनकृतः प्रत्तसेवं प्रभाभि-
भूमौ सौमेरवीभिर्दिवि वरिवसितं दीप्तिभिर्देवधाम्नाम् ।
भूयस्यै भूतये वः स्फुरतु सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं
चाक्रं जाग्रत्प्रतापं त्रिभुवनविजयव्यग्रमुग्रं महस्तत् ॥ २ ॥

सौमेरवीभिरमरगिरिसंबन्धिनीभिः प्रभाभिर्द्युतिभिर्भूमौ विश्वंभरायां प्रत्तसेवं प्रकृतसेवं कृतपरिचर्यम् । 'अच उपसर्गात्तः' इति तत्त्वे दकारलोपः । अमरगिरिकिरणपरिचरितमित्यर्थः । दिनकृतः सूर्यस्य मयूखैः किरणैर्नभस्याकाशे प्रत्युद्यातं प्रत्यागत्य परिपूजितम् । प्रभाकरप्रभाविर्भावसंभावितमित्यर्थः । देवधाम्नाममरसौधानां नक्षत्राणां वा दीप्तिभिः प्रभाभिर्दिवि स्वर्गलोके वरिवसितमुपासितम् । सुरवरनिकरकनकमयसदनरुचिररुचिचयपरिचरितमित्यर्थः । नक्षत्रप्रभासेवितमिति वार्थः । सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं सर्वासु दिक्षु भ्रान्ताः सान्द्रा निबिडाः स्फुलिङ्गाः कृशानुकणा यस्य तत् । सकलदिगन्तरालबम्भ्रम्यमाणनीरन्ध्रकरालाग्निकणमिति यावत् । त्रिभुवनविजयव्यग्रं त्रयाणां भुवनानां विजये व्यग्रं ससंभ्रमम् । त्रिभुवनविजयव्यासङ्गनिर्जितत्रिभुवनान्तरालवर्तमानपरिपन्थिपरम्परमित्यर्थः । जाग्रत्प्रतापमतिस्फुरत्प्रतापदहनम् । प्रतिदिशं प्रकाशमानप्रतापप्रवृत्तिप्रकृष्टमित्यर्थः । उग्रं प्रतिभटभयंकरम् । चाक्रं चक्रस्येदं चक्रराजसंबन्धि तत्प्रसिद्धं महस्तेजो वो युष्माकं भूयस्यै बहुतरायै भूतये भूयात् । 'बहोर्लोपो भू च बहोः' इति ॥

पूर्णे पूरैः सुधानां सुमहति लसतः सोमबिम्बालवाले
बाहाशाखावरुद्धक्षितिगगनदिवश्चक्रराजद्रुमस्य ।
ज्योतिश्छद्मा प्रवालः प्रकटितसुमनःसंपदुत्तंसलक्ष्मीं
पुष्णन्नाशामुखेषु प्रदिशतु भवतां सम्प्रकर्षं प्रहर्षम् ॥ ३ ॥

सुधानां पूरैरमृतरसप्रवाहैः पूर्णे तस्मिन् । मधुरतरसुधारसप्रवाहप्रपञ्चपरिपूरित इति

यावत् । सुमहति महत्तरेऽपरिच्छिन्नवैभवे सोमविम्बालवाले शिशिरकरमण्डलमेवाल-वालं तस्मिन् लसतो विराजमानस्य । वाहाशाखावरुद्धक्षितिगगनदिवः बाहा भुजा एव शाखा विटपास्ताभिरवरुद्धा आक्रान्ताः क्षितिर्धरित्री गगनमन्तरिक्षं द्यौः स्वर्गश्च क्षिति-गगनद्यावः वाहाशाखावरुद्धाः क्षितिगगनद्यावो येन सः । तस्य चक्रराजद्रुमस्य सुदर्श-नकल्पद्रुमस्य ज्योतिश्छद्मा ज्योतिस्तेजश्छद्म व्याजो यस्य तथोक्तः प्रवालः किस-लयः । ज्योतिर्नामकं किसलयमित्यर्थः । प्रकटितसुमनःसंपत् प्रकटिता प्रचुरीकृता सुमनसां पुष्पाणासंपद्येन सः । आशामुखेषु दिङ्मुखेषूत्तंसलक्ष्मीं कर्णाभरणशोभां पुष्णन् वहुलयन् । संपादयन्नित्यर्थः । भवतां युष्माकं सप्रकर्षं प्रहर्षम् । निरतिशयानन्द-मित्यर्थः । प्रदिशतु दद्यात् । मधुरतरसरससुधारसपरिवाहपरिपूर्णमहत्तरसुधाकरालवा-ललसत्सुदर्शनकल्पद्रुज्योतिःप्रवालः सुमनःसंपत्समृद्धो दिङ्मण्डलमण्डनायितः सन्भवतां निष्प्रतीपं प्रमोदं प्रदद्यादित्यर्थः ॥

आरादारात्सहस्राद्विसरति विमतक्षेपदक्षाद्यदक्षा-
न्नाभेर्भास्वत्सनाभेर्निजविभवपरिच्छिन्नभूमेश्च नेमेः ।
आम्नायैरककण्ठैः स्तुतमहिम महो माधवीयस्य हेते-
स्तद्वो दिक्ष्वेधमानं चतसृषु चतुरः पुष्यतात्पूरुषार्थान् ॥ ४ ॥

सहस्रात्सहस्रसंख्यासंख्येयात् । आरादरसमूहात् । समूहार्थे णच् । 'अचो ञ्णिति' इति वृद्धिः । विमतक्षेपदक्षात् । शत्रुनिरसनसमर्थादित्यर्थः । अक्षात्सुदर्शनावयवविशे-षात् । भास्वत्सनाभेर्भास्वतः सूर्यस्य सनाभिर्वन्धुस्तस्य नाभेः पिण्डिकायाः । भास्वत्स-नाभिमध्यप्रदेशादित्यर्थः । निजविभवपरिच्छिन्नभूमेः निजः स्वकीयो विभवो विस्तार-स्तेन परिच्छिन्ना परिमिता भूमिर्यया सा तस्या नेमेः प्रधेश्च सकाशात् संजातं यन्महः आरादन्तिके दूरे च । सर्वत्रेत्यर्थः । विसरति व्याप्नोति । एककण्ठैरविसंवादिभिराम्नायैः स्तुतमहिम स्तुतो वर्णितो महिमा यस्य तत् । अथवा वेदैरेकः कण्ठो यस्मिन्कर्मणि तदविद्यमानविरोधवस्तु स्तुतमहिम । चतसृषु प्राच्यवाच्यादिषु दिक्षु दिशास्वेधमानं वर्धमानं माधवीयस्य श्रीरङ्गसंबन्धिनो हेतेरायुधस्य चक्रस्य तन्महश्चतुरः पुरुषार्थान्धर्मा-र्थकाममोक्षान्पुष्यतात्पुष्णातु ॥

श्यामं धामप्रसृत्या क्वचन भगवतः क्वापि बभ्रु प्रकृत्या
शुभ्रं शेषस्य भासा क्वचन मणिरुचा क्वापि तस्यैव रक्तम् ।
नीलं श्रीनेत्रकान्त्या क्वचिदपि मिथुनस्यादिमस्येव चित्रां
व्यातन्वानं वितानश्रियमुपचिनुताच्छर्म वश्चक्रभानम् ॥ ५ ॥

क्वचन कस्मिंश्चित्प्रदेशे भगवतः प्रकटितनीलकटकाम्बुदचयेन घूर्णितवैभवस्य (?) वैकुण्ठकण्ठीरवस्य धामप्रसृत्या धाम्नो निर्जितनीलोत्पलमेघनीलशिलाकान्तेः प्रसृत्या

व्याप्त्या श्यामम् । क्वापि प्रकृत्या बभ्रु स्वभावतः पिङ्गलवर्णम् । क्वचन शेषस्यामृतफेनपटलपाण्डुरविग्रहस्यानन्तस्य भासा प्रभया शुभ्रं धवलम् । क्वापि तस्यैव शेषस्यैव मणिरुचा शिरोभागस्थितपद्मरागप्रभापटलेन रक्तं जपाकुसुमलोहितम् । क्वचिदपि श्रीनेत्रकान्त्या अञ्जनरञ्जितयोर्नीलोत्पलदलरमणीययोः श्रीरङ्गनायिकानयनयोः प्रभया नीलं कृष्णं सत् मिथुनस्यादिमस्य सश्रीकस्य श्रीरङ्गनाथस्य चित्रां नानावर्णां वितानश्रियमुल्लोचशोभां व्यातन्वानं कुर्वाणमिव स्थितं चक्रभानं सुदर्शनतेजो वः शर्म उपचिनुतात्संपादयतु प्रचुरयतु ॥

शंसन्त्युन्मेषमुच्छोषितपरमहसो भास्वतः कैटभारे-
रिन्धे संध्येव नक्तंचरविलयकरी या जगद्वन्दनीया ।
बन्धूकच्छायबन्धुच्छविघटितघनच्छेदमेदस्विनी सा
राथाङ्गी रश्मिभङ्गी प्रणुदतु भवतां प्रत्यहोत्थानमेनः ॥ ६ ॥

उच्छोषितपरमहस उच्छोषितं चुलुकितं अथवा उच्छोषितं शुष्कीकृतं परेषां चन्द्रादिग्रहाणां महस्तेजो येन स तस्य भास्वतः सूर्यस्योन्मेषमुदयं शंसन्ती संध्येव । उच्छोषितपरमहसः कवलितप्रत्यर्थिप्रतापस्य कैटभारेः श्रीरङ्गनायकस्योन्मेषमघटमानघटकत्वं शंसन्ती ब्रुवाणा । नक्तंचरविलयकरी राक्षसविनाशकरी । संध्यापक्षे समानम् । जगद्वन्दनीया निखिलभुवनोपास्या राथाङ्गी सुदर्शनसंबन्धिनी रश्मिभङ्गी ज्वालापरिपाटी संध्येव इन्धे प्रकाशते । बन्धूकच्छायबन्धुच्छविघटितघनच्छेदमेदस्विनी बन्धूकानां बन्धुजीवकुसुमानां छाया कान्तिस्तया बन्धुर्मित्रं छविस्तया घटितो युक्तो घनच्छेदो मेघखण्डस्तद्वन्मेदुरा । प्रवृद्धेत्यर्थः । संध्यापक्षेऽपि समानम् । सा ज्वाला भवतां प्रत्यहोत्थानं प्रतिदिनभवमेनः पापं प्रणुदतु ॥

साम्यं धूम्याप्रवृध्या प्रकटयति नभस्तारकाजालकानि
स्फौलिङ्गीं यान्ति कान्तिं दिशति यदुदये मेरुरङ्गारशङ्काम् ।
अग्निर्मग्नार्चिरैक्यं भजति दिननिशावल्लभौ दुर्लभाभौ
ज्वालावर्ताविव स्तः प्रहरणपतिजं धाम वस्तद्धिनोतु ॥ ७ ॥

यदुदये यस्य ज्वालाचक्रस्योदये नभोऽन्तरिक्षं धूम्याप्रवृध्या धूमसमूहसमृध्या । 'पाशादिभ्यो यः' इति यप्रत्ययः । पाशादिराकृतिगणः । 'ग्रामता जनता धूम्या' इत्यमरः । साम्यं सादृश्यं प्रकटयति विशदयति । धूमसमूहसमृद्धिसाम्यं भजतीत्यर्थः । तारकाजालकानि तारकाणां जालानि समूहास्त एव जालकानि । स्वार्थे कप्रत्ययः । अथवा कोरकावस्थितत्वाज्जालकानीत्युच्यन्ते । कोरकावस्थितानि नक्षत्राणीत्यर्थः । स्फौलिङ्गीं स्फुलिङ्गसंबन्धिनीं कान्तिं शोभां यान्ति गच्छन्ति । मेरुः स्वर्णाचलोऽङ्गारशङ्कामयमङ्गार इति संदेहं दिशति ददाति । अग्निरनलो मग्नार्चिर्विलीनप्रकाश ऐक्यं

ज्वालान्तःपातित्वं भजति प्राप्नोति । दिननिशावल्लभौ दिनं च निशा च दिननिशे तयोर्वल्लभौ रविशशी दुर्लभाभौ अभिभूतप्रकाशौ सन्तौ ज्वालावर्ताविव ज्वालाम्भसां भ्रमिप्रकाराविव स्तो भवतस्तत्तादृशप्रभावं प्रहरणपतिजमायुधराजसंजातं धाम तेजो वो युष्मान्धिनोत्वानन्दयतु । प्रीणात्वित्यर्थः ॥

दृष्टेऽधिव्योम चक्रे विकचनवजपासंनिकाशे सकाशं
स्वर्भानुर्भानुरेष स्फुटमिति कलयन्नागतो वेगतोऽस्य ।
निष्टप्तो यैर्निवृत्तो विधुमिव सहसा स्प्रष्टुमद्यापि नेष्टे
घर्मांशुं ते घटन्तामहितविहतये भानवो भास्वरा वः ॥ ८ ॥

व्योम्नि इत्यधिव्योम । विभक्त्यर्थेऽव्ययीभावः । विकचनवजपासंनिकाशे विकसितनवजपाकुसुमसमूहमेचक्के सुदर्शनपुरुषे दृष्टे विलोकिते सति स्वर्भानू राहुर्दृष्टिविषयो ह्येष स्फुटं व्यक्तं यथा भवति तथा भानुः सूर्योऽयमिति कलयन्निश्चिन्वानः अस्यामुष्य सकाशं समीपं वेगतो रयादागतो यैर्भानुभिर्निष्टप्तो नितरां तप्तो भानुकृतसंतापमसहमानो निवृत्तः परावृत्तः सन्नद्यापीदानीमपि तद्भयाद्धर्मांशुमुष्णकिरणं विधुमिव चन्द्रमिव सहसा शीघ्रं स्प्रष्टुं स्पर्शं कर्तुं नेष्टे न समर्थस्ते भास्वरा विद्योतमाना भानवः किरणा अहितविहतये शत्रुविनाशाय घटन्तां चेष्टन्तां कल्पन्ताम् ॥

देवं हेमाद्रितुङ्गं पृथुभुजशिखरं बिभ्रतीं मध्यदेशे
नाभिद्वीपाभिरामामरविपिनवतीं शेषशीर्षासनस्थाम् ।
नेमिं पर्यायभूमिं दिनकरकिरणादृष्टसीमः परीत्य
प्रीत्यै वश्चक्रवालाचल इव विलसन्नस्तु दिव्यास्त्ररश्मिः ॥ ९ ॥

पृथुभुजशिखरं पृथवः । मांसला इत्यर्थः । ते च ते भुजाश्च त एव शिखराणि श्रृङ्गाणि यस्य सः । हेमाद्रिः स्वर्णाद्रिस्तद्वत्तुङ्गमुन्नतं देवं सुदर्शनपुरुषं मध्यदेशे बिभ्रतीं दधतीम् । नाभिद्वीपाभिरामां नाभिः पिण्डिका सैव द्वीपस्तेनाभिरामां रमणीयाम् । अराण्येव विपिनान्यस्याः सन्तीत्यरविपिनवतीम् । शेषशीर्षासनस्थां शेषशिरःसिंहासनासीनाम् । पर्यायभूमिं वसुंधरापरतनुं नेमिं प्रधिं परीत्य परित आवृत्य दिनकरकिरणादृष्टसीमस्तरणिकिरणाविषयप्रदेशश्चक्रवालाचल इव लोकालोकपर्वत इव विलसन्प्रकाशमानश्चक्रवालसदृशो दिव्यास्त्ररश्मिर्वो युष्माकं प्रीत्यै सुखायास्तु भवतु ॥

एकं लोकस्य चक्षुर्द्विविधमपनुदत्कर्म नम्रत्रिनेत्रं
दात्रर्थानां चतुर्णां गमयदरिगणं पञ्चतां षड्गुणाढ्यम् ।
सप्तार्चिःशोधिताष्टापदनवकिरणश्रेणिरज्यद्दशाशं
पर्यस्याद्वः शताङ्गावयवपरिवृढज्योतिरीतीः सहस्रम् ॥ १० ॥

लोकस्य भुवनस्यैकं मुख्यम् । प्रधानभूतमित्यर्थः । चक्षुर्लोचनम् । 'चक्षुर्देवानामुत मर्त्यानाम्' इति श्रुत्युक्तत्वात् । द्विविधं द्विप्रकारं कर्म पुण्यपापरूपं कर्मापनुदन्निर्गमयत् । विनाशयदित्यर्थः । नम्रत्रिनेत्रं नतत्रिनेत्रः शिवो यस्य तत् । चतुर्णामर्थानां धर्मार्थकाममोक्षाणां दातृ दायकम् । अरिगणं शत्रुनिकरं पञ्चतां मृतिं गमयन्नयत् । षड्गुणाढ्यं ज्ञानशक्त्यादिकल्याणगुणसिद्धम् । सप्तार्चिरग्निस्तेन शोषितं तापितं विलीनम् । द्रवीभूतमिति यावत् । तच्च तदष्टापदं च काञ्चनं तद्वन्नवकिरणश्रेणिस्तया रज्यन्त्यस्ताम्रा भवन्त्यो दश आशा दिशो यस्य तत् । शताङ्गावयवपरिवृढज्योतिः शताङ्गो रथः । 'शताङ्गः स्यन्दनो रथः' इत्यमरः । तस्यावयवपरिवृढश्चक्रप्रभुस्तस्य ज्योतिर्महो वः सहस्रमीतीरसंख्या ईतीः पर्यवस्यादपनुदतु ॥

उच्चण्डे यच्छिखण्डे निबिडयति नभःक्रोडमर्कोऽटति द्या-
मभ्यस्य प्रौढतापग्लपितवपुरपो बिभ्रतीरभ्रपङ्क्तीः ।
धत्ते शुष्यत्सुधोत्सो विधुरपमधुनः क्षौद्रकोषस्य साम्यं
रक्षन्त्वस्त्रप्रभोस्ते रचितसुचरितव्युष्टयो घृष्णयो वः ॥ ११ ॥

उच्चण्डेऽत्यन्तकराले । शत्रूनुद्दिश्य क्रूर इत्यर्थः । यच्छिखण्डे येषां घृणीनां शिखण्डे शिखाप्रदेशे नभःक्रोडमाकाशमध्यं निबिडयति व्याप्नुवति सत्यर्कः प्रभाकरः प्रौढतापग्लपितवपुः प्रौढतापेन ग्लपितं ग्लापितं वपुर्यस्य स ग्लपितवपुः सन्नपो बिभ्रतीर्दधतीरभ्रपङ्क्तीर्मेघपरम्परा अभ्यस्य पौनःपुन्येन संसेव्य द्यामाकाशमटति गच्छति । आकाशं प्राप्य परिभ्रमतीत्यर्थः । विधुश्चन्द्रः शुष्यत्सुधोत्सः शुष्यन्सुधाया उत्सः प्रवाहो यस्य । 'उत्सः प्रस्रवणं वारिप्रवाहः' इत्यमरः । शुष्कीभवन्सुधाप्रवाहो यस्य स अपमधुनो निर्गतमाक्षिकस्य क्षौद्रकोषस्य क्षौद्रपटलस्य साम्यं सादृश्यं धत्ते प्राप्नोति । अस्त्रप्रभोरस्त्रराजस्य सुदर्शनपुरुषस्य ते तादृशा रचितसुचरितव्युष्टयो रचिताः कृताः सच्चरित्राणां व्युष्टयः समृद्धयो यैस्ते । 'व्युष्टिः फले समृद्धौ च' इत्यमरः । घृष्णयः किरणा वो युष्मान्रक्षन्तु ॥

पद्मौघो दीर्घिकाम्भस्यवनिधरतटे गैरिकाम्बुप्रपातः
सिन्दूरं कुञ्जराणां दिशि दिशि गगने सांध्यमेघप्रबन्धः ।
पारावारे प्रवालो वनभुवि च तथा प्रेक्ष्यमाणः प्रमुग्धैः
साधिष्ठं वः प्रमोदं जनयतु दनुजद्वेषिणस्त्वैषराशिः ॥ १२ ॥

दीर्घिकाम्भसि वापिकास्वच्छतरतोये पद्मौघो रक्तकमलषण्डः किम् । अवनिधरतटे पर्वतानां स्फटिकमयतटे गैरिकाम्बुप्रपातो धातुजलप्रपातः किम् । दिशि दिशि प्राच्यादिदिक्षु कुञ्जराणां सिन्दूरं दिक्कुम्भिकुम्भस्थलालंकारभूतसिन्दूरपरागः किम् । गगने वियति सांध्यमेघप्रबन्धः संध्यासंबन्धिजलधरपटलः किम् । पारावारे समुद्रे प्रवालो विद्रुमः

किम् । वनभुवि काननप्रदेशे प्रवालः पल्लवः किम् । एवंप्रकारेण प्रमुग्धैरविदग्धैः प्रेक्ष्यमाणो दृश्यमान उत्प्रेक्ष्यमाणः शङ्क्यमानः । सर्वत्र काकुरनुसंधेया । 'किं चोच्चैःस्वरलभ्यश्चेत्काकुः' इति भरतेनोक्तम् । दनुजद्वेषिणो रक्षःसंहारिणः सुदर्शनपुरुषस्य त्वैषराशिस्त्विषां संबन्धि त्वैषं स चासौ राशिश्च वः साधिष्ठं प्रमोदं संतोषं प्रबोधं विज्ञानं वा जनयतूत्पादयतु ॥

भानो भा नो त्वदीया स्फुरति कुमुदिनीमित्र ते कुत्र तेज-
स्तारास्थारादधीरोऽस्यनल न भवतः स्वैरमैरंमदार्चिः ।
शंसन्तीत्थं नभःस्था यदुदयसमये चक्रराजांशवस्ते
युष्माकं प्रौढतापप्रभवभवगदापक्रमाय क्रमन्ताम् ॥ १३ ॥

यदुदयसमये चक्रज्वालासमुदयकाले नभःस्था वियति दिव्यविमानारूढा देवा तेजःपदार्थानुद्दिश्येत्थं सोपहासं शसन्ति वदन्ति । किमिति । हे भानो सूर्य, त्वदीया त्वत्संबन्धिनी भा दीप्तिर्नो स्फुरति न प्रकाशते । हे कुमुदिनीमित्र चन्द्र, ते तेजश्चन्द्रिका कुत्र कस्मिन्प्रदेशे विलीनम् । हे ताराः, आराद्दूरत एव स्थ भवथ । अनल पावक, अधीरोऽसि । सा ज्वाला त्वां न गणयति किमर्थं चञ्चलो भवसीत्यर्थः । हे ऐरंमदार्चिः सौदामिनीसंबन्धितेजः, भवतः स्वैरं न निरन्तरावर्तमानयुक्तम् (?) । अर्चिःशब्दस्य नपुंसकस्यापि 'अर्चिर्हेतिः शिखा स्त्रियाम्' इति स्त्रीलिङ्गत्वपक्षेऽप्येवं योज्यम् । ऐरंमदार्चिर्विद्युत्संबन्धिनी अर्चिस्तेजो यस्य पुरुषस्य स ऐरंमदार्चिस्तस्य संबन्धी विद्युत्पुरुष इत्यर्थः । ते तादृशा अस्त्रराजांशवश्चक्राजमयूखा युष्माकं प्रौढश्चासौ तापश्च तस्य प्रभवो जन्मसदनं स चासौ भवश्च स एव गदस्तस्यापक्रमो निष्क्रमणं तस्मै क्रमन्तां पादप्रसारं कुर्वन्तु ॥

जग्ध्वा कर्णेषु दूर्वाङ्कुरमरिसुदृशामक्षिषु स्वर्वधूनां
पीत्वा चाम्भश्चरन्त्यः सवृषमनुगता वल्लवेनादिमेन ।
गावो वश्चक्रभर्तुः परममृतरसं प्रश्रितानां दुहाना
ऋद्धिं स्वालोकलुप्तत्रिभुवनतमसः सानुबन्धां ददन्ताम् ॥ १४ ॥

अरिसुदृशां शत्रुयुवतीनां कर्णेषु दूर्वाङ्कुरं कर्णावतंसीकृतगारुत्मतरत्नप्रभापटलरमणीयनूतनदूर्वादलं जग्ध्वा । भक्षयित्वेत्यर्थः । शत्रुस्त्रीणां वैधव्यं विधायेति यावत् । स्वर्वधूनाममररमणीनामक्षिषु नयनेष्वम्भः पीत्वा जलं निपीय । रक्षोविक्षोभितदिविषन्महिषीविलोचनविनिर्गताश्रुपरम्परां निवारयित्वेत्यर्थः । पशवस्तृणं जग्ध्वा तदनु जलं पिबन्तीति प्रसिद्धिः । सवृषं वृषेण धर्मेण वृषभेण च सह वृत्तिर्यस्मिंस्तत् चरन्त्यो विचरन्त्यः । आदिमेन चिरन्तनेन वल्लवेन गोपालेनानुयाता अनुगम्यमानाः । प्रश्रितानाममृतरसं निरतिशयानन्दं दुग्धं च परमत्यर्थं दुहानाः प्रस्नुवानाः । स्वालोकलुप्तत्रिभुवन-

तमसः स्वालोकेन स्वप्रकाशेन स्वदर्शनेन वा लुप्तं विनष्टं त्रिभुवनतमोऽज्ञानान्धकारश्च याभिस्ताः । चक्रभर्तुः सुदर्शनराजस्य गावः किरणाः सानुबन्धां नैरन्तर्येणानुवर्तमानामृद्धिं समृद्धिं ददन्तां वितरन्तु । सानुबन्धशब्दः किरणविशेषणतया वा योज्यः ॥

सेनां सेनां मघोनो महति रणमुखेऽलं भयं लम्भयन्ती-
रुत्सेकोष्णालुदोष्णां प्रथमदिविषदामावलीर्यावलीढे ।
विश्वं विश्वंभराढ्यं रथपदधिपतेर्लीलया पालयन्ती
वृद्धिः सा दीधितीनां वृजिनमनुजनुर्मार्जयत्वर्जितं वः ॥ १५ ॥

महति रणमुखे महत्तरसंगररङ्गे इनाः प्रभवस्तैः सहिताम् । 'इनः सूर्ये प्रभौ' इत्यमरः । मघोनः शक्रस्य सेनामत्यर्थं भयं लम्भयन्तीः । उत्सेकोष्णदोष्णः उत्सेकेन गर्वेणोष्णालूनि उष्णं परजनसमृद्धिं न सहन्त इत्युष्णालूनि मदातिशयेन परविभवासहिष्णूनि । 'शीतोष्णाभ्यामालुच' 'न सहते इति वक्तव्यम्' । इति शीतं न सहते उष्णं न सहते इत्यालुच्प्रत्ययः । उष्णासहिष्णूनि दोष्णि भुजा यासां ताः पूर्वदिविषदां पूर्वदेवानामावलीः पङ्क्तीर्यावलीढे आस्वादयति । विश्वं विश्वंभराढ्यं विश्वंभराढ्या यस्य तं विश्वं पृथिव्यादिपञ्चभूतात्मकं जगत्कर्म लीलया अनायासेन पालयन्ती रक्षन्ती रथपदधिपतेः सुदर्शनपुरुषस्य दीधितीनां द्युतीनां वृद्धिरनुजनु जनुषि जनुषि अर्जितं संपादितं वृजिनं दुरितं मार्जयतु । शोधयत्वित्यर्थः ॥

तप्ता स्वेनोष्मणेव प्रतिभटवपुषामस्रधारां धयन्ती
प्राप्तेव क्षीबभावं प्रतिदिशमसकृत्तन्वती घूर्णितानि ।
वंशास्थिस्फोटशब्दं प्रकटयति पटून्यावहन्त्यट्टहासा-
न्भाः सा वः स्यन्दनाङ्गप्रभुसमुदयिनी स्पन्दतां चिन्तिताय ॥ १६ ॥

या भाः स्वेन स्वकीयेनोष्मणा औष्ण्येनेव तप्ता दह्यमाना असह्यप्रतापवती प्रतिभटवपुषां परिपन्थिशरीराणामस्रधारां रुधिरधारां धयन्ती पिबन्ती क्षीबभावं मत्ततां प्राप्तेव गतेव प्रतिदिशं दिशि दिशि घूर्णितानि घूर्णनान्यसकृदनेकशस्तन्वती कुर्वती वंशास्थिस्फोटशब्दम् । वंशवत्स्थितत्वाद्वंशास्थीत्युच्यते । वंशो नाम चरमभागावस्थितः शरीराधारस्तस्यास्थि तस्य स्फोटः स्फुटनं तस्मात्संजातः शब्दश्चिटचिटायमानो ध्वनिस्तमावहन्ती धारयन्ती । कुर्वतीत्यर्थः । पटून्क्षोभसमर्थानट्टहासान्विश्रृङ्खलहसितानि प्रकटयति व्यपदिशति । एवं चाघटमानशब्दोऽट्टहास इति सूचयन्ती । लोके तावन्मेदुरा प्रमदा उष्णालुः सती मदिरां पीत्वा प्रमत्ता भूत्वा घूर्णितानि प्रकटयति हसितानि च विदधाति । स्यन्दनाङ्गप्रभुसमुदयिनी स्यन्दनाङ्गप्रभोश्चक्रराजात्समुदयः सोऽस्यास्तीति समुदयिनी सा वश्चिन्तिताय चिन्तितार्थसिद्धये स्पन्दतां चेष्टताम् ॥

देवैरासेव्यमानो दनुजभटभुजादण्डदर्पोष्मतप्तै-
राशारोधोतिलङ्घी लुठदुडुपटलीलक्ष्यडिण्डीरपिण्डः ।
रिङ्गज्ज्वालातरङ्गत्रुटितरिपुतरुव्रातपातोग्रमार्ग-
श्चाक्रो वः शोचिरोघः शमयतु दुरितापह्नवं दाववह्निम् ॥१७॥

दनुजभटभुजादण्डदर्पोष्मतप्तैः दनुजभटा राक्षसवीरास्तेषां भुजा एव दण्डास्तेषां दर्पो गर्वस्तस्मात्संजातमूष्म तेन तप्तास्तैर्देवैरासेव्यमानः । उष्णतप्ता जलप्रवाहं प्रविशन्ति । आशारोधोतिलङ्घी आशा दिशस्ता एव रोधांसि तटान्यतिलङ्घयितुं शीलमस्यास्तीत्यतिलङ्घी । लुठदुडुपटलीलक्ष्यडिण्डीरपिण्डः लुठन्ती परिवर्तमाना उडूनां नक्षत्राणां पटली समूहः सैव लक्ष्यं व्याजो यस्य स एव डिण्डीरपिण्डः उडुपटलीव्याजडिण्डीरपिण्डः फेनकवलो यस्य सः । रिङ्गज्ज्वालातरङ्गत्रुटितरिपुतरुव्रातपातोग्रमार्गः । ज्वाला एव तरङ्गाः रिङ्गन्तश्चलन्तश्च ते ज्वालातरङ्गाश्च तैस्त्रुटितास्ते च रिपुतरवः शत्रुवृक्षास्तेषां व्रातः समूहस्तस्य पातः पतनं तेनोग्रो भयंकरो मार्गो यस्य सः । चाक्रः सुदर्शनसंबन्धी शोचिरोघस्तेजःप्रवाहः । 'ओघो वृन्देऽम्भसां रये' इत्यमरः । वो युष्माकं दुरितापह्नवं दुरितं पापमपह्नव आवरणमाच्छादनं यस्मिन्स तं दाववह्निं दावानलं शमयतु निर्वापयतु । दुरितशब्दाभिहितं दावदहनं विनाशयत्वित्यर्थः ॥

भ्राम्यन्ती संश्रितानां भ्रमशमनकरी छन्नसूर्यप्रकाशा
सूर्यालोकानुरूपा रिपुहृदयतमस्कारिणी निस्तमस्का ।
धारासंपातिनी च प्रकटितदहना दीप्तिरस्त्रेशितुर्व-
श्चित्रा भद्राय विद्रावितविमतजना जायतामायताय ॥ १८ ॥

भ्राम्यन्ती स्वयं भ्रमणानि कुर्वती संश्रितानामाश्रितानां भ्रमशमनकरी । भ्रान्तिनाशिनीत्यर्थः । स्वयं भ्रमन्त्यप्याश्रितभ्रान्तिं निवारयतीति चित्रम् । छन्नसूर्यप्रकाशा आच्छादितः सूर्यस्य प्रकाशः प्रभा यया सा । सूर्यालोकानुरूपा सूरिजनप्रकाशनदर्शनयोरनुरूपा । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः । रिपुहृदयतमस्कारिणी शत्रुहृदयविमोहिनी । निस्तमस्का स्वयंज्योतीरूपा । धारासंपातिनी प्रकटितदहना आसारवत्यपि प्रकटितपावका । विद्रावितविमतजना पलायिताः शत्रुजना यया सा । प्रधावितशत्रुपरम्परेत्यर्थः । अस्त्रेशितुश्चक्रराजस्य चित्रा अद्भुता दीप्तिः प्रभावः आयताय दीर्घाय भद्राय मङ्गलाय जायतां प्रादुर्भवतु ॥

निन्ये वन्येव काशी दवशिखिजटिलज्योतिषा येन दाहं
कृत्या वृत्त्या विलिल्ये शलभसुलभया यत्र चित्रप्रभावे ।
रुद्रोऽप्यद्रेर्दुहित्रा सह गहनगुहां यद्भयादभ्ययासी-
द्दिश्याद्विश्वार्चितो वः स शुभमनिभृतं शौरिहेतिप्रतापः ॥१९॥

दवशिखिजटिलज्योतिषा दवदहनवज्जटिलानि जटावन्ति । दीर्घतराणीत्यर्थः । ज्योतींषि यस्य स तेन येन प्रतापेन काशी वाराणसी वन्येव वनसमूह इव दाहं भस्मतां निन्ये नीता । चित्रप्रभावे आश्चर्यमहत्त्वे यस्मिन्प्रतापे कृत्या काचन देवता । 'कृत्या क्रियादेवतयोः' इत्यमरः । शलभसुलभया शलभैर्लब्धुं शक्यया वृत्त्या वर्तनेन विलिल्ये। कृत्या सुदर्शनज्वालया शलभन्यायेन विलीना बभूवेत्यर्थः । रुद्रः सकललोकसंहारकः शिवोऽप्यद्रिदुहित्रा भवान्या सार्धं यद्भयात्सुदर्शनप्रतापभयाद्गहनगुहां दुरभिभवगह्वरमभ्ययासीदविशत् । विश्वार्चितो जगत्पूजितः शौरिहेतिप्रतापः श्रीरङ्गनायककरकिसलयालंकरणावरणविभ्रमो वः शुभं कल्याणमनिभृतं प्रस्फुटं यथा स्यात्तथा दिश्याद्दद्यात् । अथवा शुभविशेषणमनिभृतपदम् ॥

उद्यन्बिम्बादुदारान्नयनहिमजलं मार्जयन्निर्जरीणा-
मज्ञानध्वान्तमूर्छाकरजनिरजनीभञ्जनव्यञ्जिताध्वा ।
न्यक्कुर्वाणो ग्रहाणां स्फुरणमपहरन्नर्चिषः पावकीया-
श्चक्रेशार्कप्रकाशो दिशतु दश दिशो व्यश्नुवानं यशो वः ॥२०॥

उदारादत्यन्तविशालाद्बिम्बादुद्यन्प्रादुर्भवन् निर्जरीणां देवाङ्गनानां नयनहिमजलं मार्जयन्निष्कासयन् । तुहिनगिरिपरिसरविचरदमरयुवतिनिकरनयनकुवलयाविलतामपहरन्निति । अज्ञानध्वान्तमूर्छाकरजनिरजनीभञ्जनव्यञ्जिताध्वा । अज्ञानं च ध्वान्तं चाज्ञानध्वान्ते ताभ्यां जायमानां मूर्छां करोतीति मूर्छाकरस्तच्च तज्जनितमश्च तदेव रजनी च तस्या भञ्जनं नाशनं तेन व्यञ्जितः प्रकटितोऽध्वा येन सः । अज्ञानजनिभञ्जनेन सूर्यादतिशयो विहितः । ग्रहाणां स्फुरणमुत्तेजनं न्यक्कुर्वाण आच्छादयन् । पावकीया आग्नेया अर्चिषः प्रभा अपहरन्मुष्णन् । ईदृशश्चक्रेशार्कप्रकाशो वो दशदिशो व्यश्नुवानं दशदिशावरणं यशः प्रदिशतु ॥

वर्गस्य स्वर्गधाम्नामपि दनुजनुषां विग्रहं निग्रहीतुं
दातुं सद्योबलानां श्रियमतिशयिनीं पत्रभङ्गानुवृत्त्या ।
योक्तुं देदीप्यते या युगपदपि पुरो भूतिमय्या प्रकृत्या
सा वो नुद्यादविद्यां द्युतिरमृतरसस्यन्दिनी स्यान्दनाङ्गी ॥२१॥

स्वर्गधाम्नां देवानां वर्गस्य वृन्दस्य दनुजनुषां दानवानां वर्गस्यापि विग्रहं विरोधं शरीरं च निग्रहीतुं निराकर्तुं शमयितुमित्यर्थः । नाशयितुं प्राणैर्वियोजयितुमित्यर्थः । दानववर्गस्य बलानां सैन्यानां पत्रभङ्गानुवृत्त्या वाहनभङ्गानुस्फूर्त्या अतिशयिनीं प्रकृष्टां श्रियं संपदं दातुं खण्डयितुं विनाशयितुमित्यर्थः । दाधातोस्तुमुन् । सद्यस्तदानीमेव । स्वर्गधाम्नां वर्गस्याबलानां स्त्रीणां पत्रभङ्गानुवृत्त्या मकरिकापत्रावलीविरचनानुस्फूर्त्या अतिशयिनीं श्रियं शोभां दातुं वितरितुम् । दानववर्गस्य पुरो नगराणि भूतिमय्या

भस्मप्रचुरया प्रकृत्या शरीरेण स्वभावेन वा योक्तुं योजयितुम् । देववर्गस्य पुरःपत्तनानि भूतिमय्या ऐश्वर्यप्रचुरया प्रकृत्या स्वभावेन योक्तुं च या स्यान्दनाङ्गी द्युतिश्चाक्री द्युतिर्देदीप्यते प्रकाशत इत्यर्थः । अमृतरसस्यन्दिनी मोक्षानन्दं दुहाना सा वोऽविद्यामज्ञानं नुद्यान्निष्कासयतु ॥

दाहं दाहं सपत्नान्समरभुवि लसद्भस्मना वर्त्मना या-
न्क्रव्यादप्रेतभूताद्यभिलषितपुषा प्रीतकापालिकेन ।
कङ्कालैः कालधौतं गिरिमिव कुरुते या स्वकीर्तेर्विहर्तुं
घृष्णिः सांदृष्टिकं वः सकलमुपनयत्वायुधाग्रेसरस्य ॥ २२ ॥

समरभुवि संगररङ्गे सपत्नाञ्शत्रून्दाहं दाहं दग्ध्वा दग्ध्वा लसद्भस्मना लसद्विसरद्भस्म भसितं यत्र तत् तेन । क्रव्यादप्रेतभूताद्यभिलषितपुषा प्रेतादिवाञ्छितपोषकेण । प्रीतास्तुष्टाः कापालिका यत्र तेन वर्त्मना मार्गेण यान् गच्छन् यो घृष्णिः स्वकीर्तेर्विहर्तुं यशःसंचाराय कङ्कालैरस्थिविशेषैः कालधौतं स्वर्णकृतं गिरिमिव कुरुते । 'कालकूटं गिरिं' इति वा पाठः । आयुधाग्रेसरस्य चक्रस्य स घृष्णिर्ज्वाला वः सकलं सांदृष्टिकं सद्यःकालिकं फलमुपनयतु प्रापयतु ॥

दग्धानां दानवानां सभसितनिचयैरस्थिभिः सर्वशुभ्रां
पृथ्वीं कृत्वापि भूयो नवरुधिरझरीकौतुकं कौणपेभ्यः ।
कुर्वाणं वाष्पपूरैः कुचतटघुसृणक्षालनैस्तद्वधूनां
पापं पापच्यमानं शमयतु भवतामस्त्रराजस्य तेजः ॥ २३ ॥

दग्धानां दाहं प्रापितानां दानवानां सभसितनिचयैर्भस्मसमूहसहितैरस्थिभिः करणभूतैरतिविस्तृतां वसुधां सर्वशुभ्रां कृत्वा भूयः पुनरपि तद्वधूनां दानवीनां कुचतटघुसृणक्षालनैः कुचतटेष्वनुलिप्तकुङ्कुमरसस्य क्षालनं येषां तैः । प्रक्षालितकुचविन्यस्तकुङ्कुमद्रवैरित्यर्थः । वाष्पपूरैरश्रुप्रवाहैः । 'क्षालनात्' इति वा पाठः । कुचतटघुसृणक्षालनं वाष्पपूराणां नवरुधिरझरीसाम्यहेतुः । कौणपेभ्यः पिशाचेभ्यो नवरुधिरझरीकौतुकं नूतनरक्तप्रवाहकुतूहलं कुर्वाणं विदधत् अस्त्रराजस्य चक्रस्य तेजः पापच्यमानं परितः परिपक्वं पापं शमयतु ॥

मा गान्मोषं ललाटानल इति मदनद्वेषिणा ध्यायतेव
स्रष्ट्रा प्रोन्निद्रवासाम्बुजदलपटलप्लोषमुत्पश्यतेव ।
वज्राग्निर्मा स नाशं व्रजदिति चकितेनेव शक्रेण बद्धैः
स्तोत्रैरस्त्रेश्वरस्य द्यतु दुरितशतं द्योतमाना द्युतिर्वः ॥ २४ ॥

( इति ज्वालावर्णनम् )

ललाटानलो मस्तकनेत्रवह्निर्मोषमपहृतिं मा गादिति ध्यायतेव मदनद्वेषिणा रुद्रेण, प्रोन्निद्रवासाम्बुजदलपटलप्लोषं वासायाम्बुजं वासाम्बुजं विकसितवासपद्मदलसमूहदाहमुत्पश्यता विचारयतेव स्रष्ट्रा विधात्रा, वज्राग्निः कुलिशानलो नाशं मा स्म व्रजदिति चकितेनेव शक्रेणेन्द्रेण वद्धैर्निबन्धनरूपेण ग्रथितैः स्तोत्रैर्द्योतमाना प्रकाशमाना अब्रेश्वरस्य चक्रपुंसो द्युतिर्वो दुरितानि यतु खण्डयतु ॥ इति चक्रज्वालावर्णनम् ॥

शस्त्रास्त्रं शात्रवाणां शलभकुलमिव ज्वालया लेलिहाना
घोषैः स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान्समुद्रान् ।
व्यूढोरःप्रौढचारत्रुटितपटुरटत्कीकसक्षुण्णदैत्या
नेमिः सौदर्शनी वः श्रियमतिशयिनीं दाशतादा शताब्दम् ॥ २५ ॥

शात्रवाणां रिपूणां शस्त्रास्त्रं शस्त्राण्यमन्त्रकाणि अस्त्राणि समन्त्रकाणि शस्त्रास्त्रं शलभकुलमिव शलभसमूहमिव ज्वालया परितः परिवृत्या घूर्णमानया प्रभापरम्परया लेलिहाना आस्वादयन्ती । तृणीकुर्वतीत्यर्थः । स्वैर्घोषैः स्वीयैरारावैर्विघटितभगवद्योगनिद्रान् विघटिता विघ्निता भगवतो विष्णोर्योगनिद्रा स्वात्मानुभूतिर्यैस्तान्समुद्रान् क्षोभयन्ती आविलयन्ती । भगवदपचारासहिष्णुत्वेन प्रक्षोभितप्रलयसमयजलधरघोषेण विमोहयन्तीत्यर्थः । व्यूढेति । व्यूढेषु विशालेषु उरःसु भुजान्तरेषु प्रौढः क्रूरतरश्चारः परिभ्रमणं······पेषणचतुरसंचारस्तेन त्रुटितान्यत एव पटु स्फुटं यथा भवति तथा रटन्ति ध्वनन्ति कीकसान्यस्थीनि येषां ते व्यूढोरःप्रौढचारत्रुटितपटुरटत्कीकसाः अत एव क्षुण्णाः क्षोदं प्रापिता दैत्या यया सा । अथवा भञ्जनसंजातचिटचिटायमानशब्दवत्कीकसाः क्षुण्णा दैत्या यया सा सौदर्शनी सुदर्शनचक्रसंबन्धिनी नेमिः प्रधिर्वोऽतिशयिनीमतिशयवर्तीं श्रियं आ शताब्दं यावद्ब्रह्मस्वरूपं दाशताद्दद्यात् । शताब्दशब्दो ब्रह्मवाचकतया वार्तिककारेणोक्तः—'सत्यं ज्ञानमयानन्दमनन्तं परमाद्भुतम् । शताब्दसंज्ञकं–' इति । अथवा आ शताब्दं शतवर्षपर्यन्तम् । यावज्जीवमित्यर्थः । 'दाशृ दाने' इति धातोर्दाशतादिति ॥

धारा चक्रस्य तारागणकपिशघृणिद्योतितद्युप्रचारा
पारावाराम्बुपूरक्वथनपिशुनितोत्तालपातालयात्रा ।
गोत्राद्रिस्फोटशब्दप्रकटितवसुधामण्डलीचण्डयाना
पन्थानं वः प्रदिश्यात्प्रशमनकुशला पाप्मनामात्मनीनम् ॥ २६ ॥

तारागणकपिशघृणिद्योतितद्युप्रचारा तारागणानां कपिशाः पिङ्गलवर्णा घृणयः किरणास्तैर्द्योतितः स्फुटीकृतो दिवि प्रचारः संचारो यस्याः सा । यद्वा ('तारागणकणविततिद्योतित–' इति पाठे) तारागणा एव कणा लेशास्तेषां विततयः समूहास्ताभिर्द्योतितो द्युप्रचारो यस्याः सा । विलीनप्रकाशतया तारागणाः कणा इव म्लायमाना न प्रदीप्यन्ते । तस्मा-

